**काव्यधारा / The Kāvyadhārā , https://sites.google.com/site/praachiprajnaa/kavyadhara, a Virtual Publication for Contemporary Creative Writings in Sanskrit of प्राची प्रज्ञा / Prachi Prajna (ISSN 2348 – 8417) https://sites.google.com/site/praachiprajnaa**

**January, 2024.**

## Scope:

**The Kāvyadhārā is a Virtual Publication for Contemporary Creative Writings in Sanskrit. It aims at promotion of creative writings in Sanskrit of contemporary era. The Publication remains committed to the appraisal of creativity and reinforcement of poetic talants in the global perspective.**



**Email – prachiprajnaenb@gmail.com**

## Licence:






प्राची प्रज्ञा E-Journal in Sanskrit

Prachi Prajna / प्राचीप्रज्ञा, The online Journal in Sanskrit – ISSN 2348-8417

# काव्यधारा

**January - 2024**

(समकालिकसंस्कृतकाव्यावतरणिका)

https://sites.google.com/site/praachiprajnaa/kavyadhara

## समीक्षकः सम्पादकश्च - पं. कविरश्मिः श्रीब्रजकिशोरत्रिपाठी

### ∆ काव्यानुक्रमः ∆


प्राची प्रज्ञा
E-Journal in Sanskrit

Prachi Prajna / प्राचीप्रज्ञा, The online Journal in Sanskrit – ISSN 2348-8417

काव्यधारा
January - 2024
(समकालिकसंस्कृतकाव्यावतरणिका)
https://sites.google.com/site/praachiprajnaa/kavyadhara

# अप्रयुक्ततादशकम्

कविरश्मिः श्रीव्रजकिशोरत्रिपाठी

(१)

नवशब्दप्रयोगेणाप्रयुक्तता वदन्त्यहो।

प्राचीनस्य प्रयोगेण न नवत्वं वदन्त्यहो।।

(२)

नेच्छामो नवशब्दं चेत् तस्य जन्म निरर्थकम्।

अप्रयुक्तपदाद् दोषं तस्मात् सम्यग् विवेचयेत्।।

(३)

अमन्त्रो ह्यक्षरो नास्ति सत्यं चेत् तैश्च सम्भवे।

पदेऽप्रयुक्तता केन रूपेण संभविष्यति।।

(४)

आदेवं मानवं यावद् शब्दस्रोतो हि शाश्वतम्।

तद्वेत्ता विद्यते कोऽत्र वृथाऽतो दोषकल्पना।।

(५)

महाभाष्यं वदत्येवं माघेऽपि परिदृश्यते।

नवसर्गे गते शब्दो न नवो वर्तते भुवि।।

(६)

प्राग् विदुषां च शास्त्राणां समवायो न लभ्यते।

कुत्र कस्य प्रयोगं च ज्ञातुं तस्मात् क्षमो न कः।।

(७)

अधुना स्वगृहे तेषां भवति दर्शनं क्षणात्।

अन्तर्जालबलात् सर्वे जानन्त्यतः क्व तत्स्थितिः।।

(८)

पदानि यानि शास्त्रेषु विद्यन्ते दूषितानि च।

त्यक्त्वा पदानि तान्येव त्यजेद् ह्यन्यपदानि न।।

(९)

अपारे काव्यकान्तारे पञ्चषेषु बुधस्थितिः।

सर्वज्ञाता ततो ब्रूतेऽहंकारात् स हि दुर्जनः।।

(१०)

असहिष्णुकृते दोषः शस्त्रसमो न संशयः।

तस्मादिमं न विचिन्त्य काव्यं कुर्यात् कविर्मुदा।।

**ब्रह्मपुरम्, ओडिशा।**

***

Prachi Prajna / प्राचीप्रज्ञा, The online Journal in Sanskrit – ISSN 2348-8417

काव्यधारा

January - 2024

(समकालिकसंस्कृतकाव्यावतरणिका)

https://sites.google.com/site/praachiprajnaa/kavyadhara

# अभिरामः श्रीरामः

**डा. विपिनकुमारद्विवेदी**

मधुमन्दसुचारुगती रमते
मनुजाखिलमानसरम्यवने।
विलसच्छविरूपसुधाजलधे:
कविवृन्दसमै रसनं क्रियते।।१।।

रणकौशलदक्षधनुर्धनिको
भवसंगरमित्रमहामनुज:।
मतिमान् धृतिमान् च परार्थमत:
परसाधनवर्धनमोक्षकर:।।२।।

धृतिशीलविभूषितमञ्जुगुणं
परितो बहुभक्तगणो रमते।
परिवर्षति यत्र वशिष्ठकृपा
भवनाथयतीशविमोहहरे।।३।।

भवदारुणरूपहरो भयह
श्वलचित्तनियंत्रणभूरिपटु:।
अखिलाधनशोषितसच्छरणो
बलबुद्धिनिधानदयाजलधि:।।४।।

अनुज: खलु लक्ष्मणधीधनिको
मिथिलेशसुताहृदयाब्जरविः।
अभिराममुखो रघुकीर्तिधरो
मुनिदाशरथिर्वनभूमिरतः।।५।।

प्रभुरामतपाः शुचिशान्तमनाः
नृपसौख्यविहीनपद: सततम्।
बहुकंटकटंकितवन्यभुवि
भ्रमणं कृतवान् स्मययुक्तमुख:।।६।।

गतराज्यविलोभमना: सरल:
शुभशासनकार्यमहानिपुण:।
पुरुषोत्तमनामजगत्प्रथित:
विजयी बहुसुन्दररामवर:।।७।।

गिरिगह्वरकाननविभ्रमणो
यतिवेशधरो बहुबाहुबली।
शरचापविभूषितपाणियुगो
जनकोक्तवच:परिपालयिता।।८।।

भवबन्धनदारणकार्यपटु
र्दनुजेशदशाननसंहरण:।
खरदूषणभीषणदैत्यहरो
जलधौ नवसेतुकरो भगवान्।।९।।

कपिमित्रमणिः शबरीफलभुग्
हनुमत्परिसेवितपद्मपदः।
पशुनाथविशेषधनुर्दलन
श्छविधामगुणोदधिरामविभुः।।१०।।

पी सी पी इंटर कॉलेज, हुसैनगंज, फतेहपुर

समीक्षकः -: कविरश्मिश्रीव्रजकिशोरत्रिपाठी, ब्रह्मपुरम्, ओडिशा।

भवतो रचना श्रुतिसौख्यकरी
परिराजति यत्र हि रामकथा।
नितरां हसतात् कवितावनिता
रसिकाः प्रपिबन्तु सदा ससुखम्।।

***

-

# गुरुषोडशी

स्वामी जपसिद्धानन्दः

### गुरोः समुद्भवः

तदोंसत्-पदैर्यत् समुद्गीयमानं

परं ब्रह्म तत्त्वं विभु ज्ञानमीशम्।

दयामेत्य गम्यात्मना सम्बुभूषु

प्रणम्यं प्रणीयात्म पूज्यं ह्यनीशम् ॥१॥

### गुरोः गुणधर्माः

पवित्रं प्रियं पूरुषार्थैकहेतु

त्रितापापहं पापहं मोक्षसेतु।

शुभं शोभनं भाति वात्सल्यकेतु

गुरुं मन्वते तद् विदां मान्यमान्याः ॥२॥

### गुरोः लीलाकार्यकलापाः

सदा काममोहादिमायां नुदन्तं
मुदा रामकृष्णादिमन्त्रं दिशन्तम्।
चिदानन्दकन्दं नरं दीप्तिमन्तं
हृदा सम्भजेऽहं गुरुं धीप्रदं तम् ॥३॥

### सर्वतो दिव्यो गुरुः

स्मितं यस्य नित्यं सुखं सन्तनोति
सितं मानसं योग आधाररूपम्।
कृतं मङ्गलं मञ्जुलं सञ्चिनोति
तमीडे गुरुं सत्यमात्मस्वरूपम् ॥४॥

### कर्मफलम् अपाकुरुते गुरुः

चिरं जीवभावं समागम्य यद्यत्
तनूवाङ्मनोभिः कृतं कर्म सर्वम्।
समूलं समुन्मूलयन्तं समुद्यत्-
सुकारुण्यमीडे गुरुं छिन्नगर्वम् ॥५॥

### यथाधिकारं विदधाति गुरुः

मुमुक्षून् वरान् मन्द-मध्याधिकारान्
गुरुः प्राप्य तेषां बलादिं परीक्ष्य।
समानुद्दिधीर्षुर्विभज्योपदेशान्
विधत्ते करालम्बमीहां समीक्ष्य ॥६॥

### घ्राणेन्द्रियस्य अतिक्रमणे उपायः

गुरोः पादयोरर्पितं पुष्पमाल्यं
पदाधोरजो यः समाघ्राय चित्तम्।
परावर्तयेद् गोचरं कूटशल्यं
वगम्यातिगच्छेत् स गन्धप्रबन्धम् ॥७॥

### रसनेन्द्रियस्य अत्यये उपायः

अपामिन्द्रियं स्वादलोलं महाशं
यदस्योपदान्तौ बुधा अप्यनीशाः।
गुरूक्तं व्रतं पादपूजावशेषं
ययेवाजुषन्ते विनीतास्तयीशाः ॥८॥

### नयनेन्द्रियस्य अतिगमने मार्गः

अगम्येऽपि रूपं मिमीते यदक्षं
स्वभावात् स्वमर्थं न हातुं समर्थम्।
गुरो रूपमाराध्य दाध्यायमानो
दरीदृश्यते चिन्मयं ज्योतिरान्तम् ॥९॥

### त्वगिन्द्रियस्य अतिक्रमणे उपायः

बहिःस्पर्शजन्यं मनोज्ञं सुखं यन्-
न यायाद्वशं तस्य शास्त्रं गृणाति।
ततो व्यावृतिर्नैव लीला नराणां
पदं ते नमन् तत् स्वयं सञ्जहाति ॥१०॥

### श्रवणेन्द्रियस्य अतिगमने उपायः

स्वनं मातुमाकांक्षि नादेन्द्रियं यद्
गुरोर्वाक्सुधाधारयाऽऽपूर्यतां तद्।
कथाभिर्यशोभिस्तदीयैरुदन्तैः
प्रमोमुद्यते योऽस्य कर्णौ हि कर्णौ ॥११॥

**गुरुसेवनिष्ठं जुषते स्वयं शमादिसम्पत्**

तथा कर्मणामिन्द्रियं मुख्यमान्तं
नियच्छेन् मुनिर् यो गुरुं सेवमानः।
शमादिं निधिं प्राप्य धर्म्यं नितान्तं
क्रमादुन्नमत्येव योगे स धीरः ॥१२॥

**यशःशरीरबन्धाद् मुक्तौ उपायः**

गुरो ते मुखे नाम यन्मे गृहीतं
परप्रेमयुक्तं निशम्यानुशक्तम्।
जिह्वासून्मदं मानभोगानुनीतं
मनो मन्यते मे तृणं कीर्तिवित्तम् ॥१३॥

**अन्तर्यामिगुरोः वचनकारी भूयासम्**

प्रभो त्वन्निदेशं ममान्तर् नदन्तं
विदित्वाऽपि मायामृगं मार्गयन्तम्।
अहेतुप्रवृत्तां कृपां वाहयन् मां
तवोक्तिं नु चेक्रीयमाणं विधेहि ॥१४॥

**स्वकार्पण्यं निवेद्य कारुण्यम् उद्धावयति**

नृदेहे सुवन्द्यं सुवेद्यं सुसेव्यं

प्रमादान्न च त्वां भजे दीनबन्धो।

त्वयाऽऽदाय नेयोऽवनीयः स्वतोऽयं

प्रपन्नार्तिहारिन् सुकारुण्यसिन्धो ॥१५॥

**गुरोः इतिकर्तव्यताविधानस्य स्तुतिः**

दयाघनानां शरणागतेषु

दोषापनोदेन गुणानुवर्धनम्।

अलोकसामान्यमिदं वरेण्यं

संसिद्धिसूत्रं जयति स्वतन्त्रम् ॥१६॥

**अध्यक्षः, संस्कृत-दर्शन-विभागस्य**
**रामकृष्ण-मिशन्-विवेकानन्द-**
**शैक्षणिक-शोध-संस्थानस्य**
**बेलुडमठपदे, हावडामण्डले**
**पिन् - ७११२०२**

समीक्षकः -: कविरश्मिश्रीव्रजकिशोरत्रिपाठी, ब्रह्मपुरम्, ओडिशा।

**गुरोर्गौरवं मानसे राति सौख्यं**

**हृदस्तामसं हन्ति शिष्यस्य नित्यम्।**

**त्वदीयं सुपद्यं महानन्दकेन्द्रं**

**ददेऽहं मुदा धन्यवादं विशेषम्।।**

***

-




प्राची प्रज्ञा
E-Journal in Sanskrit

Prachi Prajna / प्राचीप्रज्ञा, The online Journal in Sanskrit – ISSN 2348-8417

**काव्यधारा**

**January - 2024**

**(समकालिकसंस्कृतकाव्यावतरणिका)**

https://sites.google.com/site/praachiprajnaa/kavyadhara

# विष्णुशयनाष्टकम्

अंकित शर्मा 'इषुप्रियः'

शेते सिन्धौ विभुर्विष्णुर्विश्वविश्रांतिहेतवे।

सर्वभूताश्रय: कृष्णो कर्मक्लांतिक्षयाय सः ॥1॥

यस्य शयनमात्रेण लोकानां प्रलयो भवेत्।

सुशेतां छद्मनिशायां लोकधर्मस्य रक्षणे ॥2॥

मोहो यस्य महारात्रिश्चैतन्यं  दिवसस्तथा।

भक्तानां यो प्रसन्नार्थं शय्यां गृह्णाति केवलम् ।।3।।

निमील्य कमलाक्षे द्वे मन्दहाससमन्वितः।

श्रमातीतो मृदुः स्वाङ्गस्तथापि शयने रतः॥4॥

सर्वजन्तून् तथा देवान् घोररात्रौ निपातते।

पालकः सर्वभूतानां श्रमक्लांतिक्षयाय च ॥5॥

सन्ध्याकालगतो रात्रेरायामं लभते मुदा।

शीतलत्वं ततः प्राप्य शयार्थं प्रार्थयाम्यहम्॥6॥

ताराणां मण्डलैर्नानाग्रहाणां शुभमण्डलैः ॥

तिमिराच्छादिता भूमि: शयनार्थं मनो भवेत् ॥7॥

शयितव्यो हृषीकेषः शयितव्य इषुप्रिय:।

रजन्या गौरवाय त्वं शयितव्यो जगत्प्रभुः ॥8॥

**रामपुर कलाँ, सबलगढ़,**
**मुरैना (म. प्र.)**

समीक्षकः -: कविरश्मिश्रीव्रजकिशोरत्रिपाठी, ब्रह्मपुरम्, ओडिशा ।

विष्णुप्रेममहाभक्तः कव्यं ते सुखदायकम्।

धन्यवादं ददे तुभ्यं सर्वदा विजयी भव।।

***

-


प्राची प्रज्ञा
E-Journal in Sanskrit

Prachi Prajna / प्राचीप्रज्ञा, The online Journal in Sanskrit – ISSN 2348-8417

काव्यधारा

January - 2024

(समकालिकसंस्कृतकाव्यावतरणिका)

https://sites.google.com/site/praachiprajnaa/kavyadhara

# हिमाचलसौन्दर्यम्

**सुज्ञानकुमारमाहान्तिः**

(१)

हैमीं भूमिं पथि जिगमिषुर्द्रक्षसि त्वं हि मित्र !

यस्मिन् तोयं शिखरविटपिक्षीरवृक्षप्रसूतम् ।

पीत्वा श्रान्तिं शमय तनुजामध्वयात्राप्रभूतां

स्थित्वा किञ्चित्क्षणमविकलं स्थास्यसि ह्युत्तरास्याम् ।।

(२)

वक्रः पन्था यदपि भवतु श्यामलागामिनो वै

नस्यात्ते सुन्दरनगरसौन्दर्यवैमुख्यदृष्टिः ।

यत्र स्त्रीणां ललितवलितैः चञ्चलापाङ्गकानां

लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि॥

(३)

आतिष्ठस्व क्षणमिह भुवि प्रस्तरे स्रस्तरेऽस्मिन्

द्रष्टुं तावद् जलनिधिसमं तोयबन्धं सुरम्यं

सिद्धाङ्गानां रतिपरिमलैः पोषितो वासितश्च

शीतो वातो हरति सुरतग्लानिमङ्गानुकूलः।।

(४)

आशैलान्तं कुटिलगमनाः शृङ्गरोहाश्च मार्गा
श्चम्बायास्ते हरिततरूभिः शीतगन्धाश्च वाताः।
डल्हौजीति प्रभवमचलं निर्झरीशीकराणां
स्वर्गस्येव प्रचुरविभवं कान्तिमत् खण्डमेकम् ।।

(५)

हिमगिरिपरिरब्धा मोदमानेव कान्ता
नवविकसितगात्रा यौवनोद्दीप्तदर्पा ।
प्रियतमपरिभुक्ता श्रान्तितन्द्राद्य सुप्ता
निखिलभुवनवित्ता श्यामलाश्रीः सुरम्या ।।

(६)

हिमनिकरनिपातैः पुष्पवृष्ट्येव देवैः
भुवि विभवसमृद्धा नन्दिता नन्दयित्री ।
निजगुणगणद्रव्यैस्तोषयन्तीह काचित्
क्व न भजति हि शंसापात्रतां भूतलेऽस्मिन् ।।

(७)

शिशिरपवनखिन्ना कम्पिताङ्गा नताङ्गी
सितरुचिमृगरोमग्रन्थितप्रावरेण ।
उपहिततनुगात्रा तुङ्गशृङ्गस्तनान्ता
समुचितरततापं श्यामलेयं बिभर्ति ।।

(८)

सितकुरवकराजीमण्डिताभा वनान्ता

कवकमुकुलपङ्क्तिश्वेतभादेवदारुः ।

शुचिपटसुविताना हर्म्यकूटालिपालि-

र्निखिलभुवनवित्ता श्यामलाश्रीः सुरम्या ।।

केन्द्रीयसंस्कृतविश्वविद्यालयः, नईदिल्ली

समीक्षकः -: कविरश्मिश्रीव्रजकिशोरत्रिपाठी, ब्रह्मपुरम्, ओडिशा ।

हिमनगपथवार्त्ता रूपसम्भारचर्च्चा
प्रकृतिविमलकान्तिर्मानससौख्यदात्री।
कविवर ! तव भाषा नव्यभावं तनोति
जयतु रचनरीतिर्धन्यवादं ददामि।।

***

-

## SUBMIT YOUR POETRY

"प्राची प्रज्ञा" (ISSN 2348 – 8417)

काव्यधारा

The *Kāvyadhārā*

https://sites.google.com/site/praachiprajnaa/kavyadhara

- कृपया स्वरचितं संस्कृतकाव्यं सम्यक् सज्जीकृत्य MS Word File मध्ये Arial Unicode MS(Devanagari) Font माध्यमेन टङ्कयित्वा prachiprajnaenb@gmail.com इत्यत्र प्रेषयन्तु ।
- 3.5 x 4.5 cm परिमितं स्वीयमेकम् सद्यः गृहीतं स्वीयं भावचित्रं 20 kb परिमितं (JPEG प्रारूपेण) अवश्यं प्रेषणीयम्।

- Please type your poetry in Sanskrit in Arial Unicode MS(Devanagari) on the MS Word File only and email to prachiprajnaenb@gmail.com .
- your photo in JPEG format not more than 50kb should also be emailed.

(Editor, The *Kāvyadhārā*)

"प्राची प्रज्ञा"

